॥ श्रीः ॥

हरिदास-संस्कृत-ग्रन्थमाला

३२



ज्योतिःशास्त्रान्तर्गतः

# प्रश्नाङ्कचूडामणिः

## ध्वजादिप्रश्नगणना च

सम्पादकः—

पं० श्रीसीतारामझा ज्योतिषाचार्यः

( द्वितीयं संस्करणम् )



चौखम्बा संस्कृत सीरीज आफिस, वाराणसी

मूल्य ०-२५ ]  [ ई० १९६२

# विषय-सूची

॥ श्रीः ॥

# प्रश्नाङ्कचूडामणिः

पूर्वाह्णे ग्राहयेत् प्रश्ने पुष्पस्य शिशुनाभिधाम् ।
यूना फलस्य मध्याह्ने देवस्यातो जरा मता ॥
तत्र वस्तुस्वराङ्कानां पिण्डं ध्रुवकमिश्रितम् ।
भाजयित्वा त्रिभिर्वाच्यं फलं शेषानुसारतः ॥

## अथाक्षराङ्काः

गुणेन्दवो १३ऽवनिकरौ २१कृशानुशशिनौ १३ धृतिः १८ ।
तिथयो १५ बाहुयमला २२ नन्दचन्द्रा १९ द्विबाहवः २२ ।
अङ्केन्दवो१९ऽवनिगुणा ३१ भानवो १२ द्विरदेन्दवः १८ ।
स्वराणां क्लीबहीनानां निर्दिष्टाः पिण्डका इमे ॥
रूपनेत्राणि २१ खगुणा ३० विश्वे १३ मङ्गलभूमयः १८ ।
शशाङ्करामा३१भान्य२७ष्टि१६रिषुरामा३५धृति१८र्नखाः २० ॥
अब्दाः १७ शराग्नयो ३५ विश्वे १३ वज्रिणः १४ पर्वतेन्दवः १७ ।
घना १७ नागभुवो १७ बाणवह्नयो ३५ द्विरदाश्विनः २८ ॥
गजचन्द्रा १८ ऋतुगुणा ३६ रूपदस्रा २१ धराश्विनः २१ ।
नखरा२०स्तिथयो १५ विश्वे १७रुद्रा११नन्दाः९कुबाहवः २१ ॥
शररामा ३५ घना १७ बाणवह्नयो ३५ ऽर्काश्च १२ वज्रिणः१४ ।
कादीनामित्यङ्कपिण्डाः क्षान्तानामीरिताः क्रमात् ॥

## अथ ध्रुवाङ्काः फलानि च

लाभालाभगतप्रश्ने खाब्धयो ४० ध्रुवकः स्मृतः ।
लाभोऽल्पलाभोऽप्यव्ययः फलमत्र क्रमान्वितम् ॥
जीवनाजीवनप्रश्ने गगनाब्धि४०ध्रुवः स्मृतः ।
क्रमेण जीवनं कष्टं मृतिश्च त्रिफलं स्मृतम् ॥
सुखदुःखात्मकप्रश्ने ध्रुवा मङ्गलभूमयः १८ ।
सुखं मिश्रं महत्कष्टं फलमत्र क्रमान्वितम् ॥
आगमागमनप्रश्ने गजरामा ३८ ध्रुवो भवेत् ।
अनुक्रमात् फलान्यत्र आगमस्थित्यनागमाः ॥
चत्वारिंशद् ध्रुवः ४० प्रोक्तः प्रश्ने जयपराजये ।
जयः सन्धिश्च भङ्गश्च क्रमेणात्र फलान्यपि ॥
गमनागमनप्रश्ने ध्रुवः स्याद् गगनाग्नयः ३० ।
गमनागमनाभावो मरणञ्च क्रमात् फलम् ॥
वर्षावर्षात्मकप्रश्ने ध्रुवकः स्याद् द्विपावकाः ३२ ।
वर्षाल्पवृष्ट्यनावृष्टिः फलमत्र क्रमाद्विदुः ।
इत्येते ध्रुवकाः प्रोक्ताः फलानि च यथाक्रमम् ।
एषामेवानुसारेण शेषमूह्यं विचक्षणैः ॥

इति प्रश्नाङ्कचूडामणिः समाप्तः ।



## अथ ध्वजादिप्रश्नगणना

ॐ नमः शिवाय। अ आ इ ई उ ऊ ऋ ॠ ऌ ॡ ए ऐ ओ औ ध्वजः सूर्य्यः। १। क ख ग घ ङ धूम्रः भौमः। २। च छ ज झ ञ सिंहः शुक्रः। ३। ट ठ ड ढ ण श्वा बुधः। ४। त थ द ध न वृषो गुरुः। ५। प फ ब भ म खरः शनिः। ६। य र ल व गजश्चन्द्रः। ७। श ष स ह ध्वाङ्क्षः।८।

अ क च ट त प य श फलोद्देशे प्रश्नः भूतभविष्यद्-वर्त्तमानज्ञानज्योतिषं कृतम्। उच्चारितफलनाम स्वकृत्वा अकारादिवर्गं कृत्वा ध्वजादौ या भवन्ति आयः कल्पनीयः अतस्तस्य फलं वदेत्।

ध्वजो धूम्रस्तथा सिंहः स्वान वृषश्च खरो गजः।
ध्वांक्षस्तथाष्टमो ज्ञेयः शुभाशुभफलं वदेत्॥

### तत्रादौ अस्तिनास्तिप्रश्नः

ध्वजे कुञ्जरसिंहे च वृषे नास्तीति निश्चितम्।
धूम्रे शुनि खरे ध्वाङ्क्षे चाऽस्ति प्रश्नस्य लक्षणम्॥ १॥

### अथ लाभालाभप्रश्नः

ध्वजे गजे वृषे सिंहे शीघ्रलाभो भवेद् ध्रुवम्।
धूम्रे शुनि खरे ध्वाङ्क्षे चास्ति लाभो विनिर्दिशेत्॥ २॥

### कुशलाकुशलप्रश्नः

सिंहे वृषे ध्वजे गजे प्रवासिकुशलप्रदम् ।
ध्वाङ्क्षे शुनि खरे धूम्रे नास्तीति कुशलं वदेत् ॥ ३ ॥

### अथ नष्टलाभालाभप्रश्नः

ध्वजे गजे वृषे सिंहे गतलाभः सुनिश्चितः ।
ध्वांक्षे शुनि खरे धूम्रे नष्टहानिं विदुर्बुधाः ॥ ४ ॥

### अथ दिग्ज्ञानम्

ध्वजे पूर्वगतश्चैव धूम्रेऽग्निदिशिगं तथा ।
सिंहे च दक्षिणे चैव नैऋत्यां च तथा शुनि ॥
पश्चिमे वृषभे ज्ञेयं वायव्ये च खरे तथा ॥
उत्तरे कुञ्जरे ज्ञेयं ऐशान्यां ध्याङ्क्षके तथा ॥ ५ ॥

### अथ जातिज्ञानम्

ध्वजे च ब्राह्मणश्चैव धूम्रे क्षत्रिय एव च ।
सिंहे वैश्यश्च विज्ञेयः शुनि शूद्रस्तथैव च ॥
वृषेऽध्यापको विज्ञेयः खरे चौरस्तु सेवकः ।
गजे दासी च विज्ञेया ध्वाङ्क्षे रजकनापितौ ॥ ६ ॥

### अथ नष्टस्थाननिर्णयप्रश्नः

विवरे च ध्वजे नष्टे धूम्रे अग्निगृहे तथा ।
तथा सिंहे अरण्ये च शुनि स्थानान्तरेऽपि च ॥

वृषे भाण्डगतश्चैव खरे काष्ठशिलातले ।
गजे नष्टगृहे चैव ध्वाङ्क्षे भूषणवेश्मनि ॥ ७ ॥

### अथ दानादिप्रश्नः

गोधूमश्च ध्वजे दद्यात् धूम्रे चैत्र तिलप्रदम् ।
पीतवस्त्रश्च सिंहे च शुनि चैव च धान्यकम् ॥
वृषे च तण्डुलं प्रोक्तं खरे च चणकन्तथा ।
गजे गुडघृतं देयं ध्वाङ्क्षे स्वर्णं विनिर्दिशेत् ॥ ८ ॥

### अथ देवपूजाप्रश्नः

ध्वजे भैरवपूजा स्यात् धूम्रे च जगदम्बिकाम् ।
सिंहे च सूर्य्यभक्तिश्च शुनि वायुसुते तथा ॥
वृषे रुद्रं विजानीयात् खरे वागीश्वरीन्तथा ।
गणेशश्च गजे चैव ध्वाङ्क्षे च पितृपूजनम् ॥ ९ ॥

### अथ प्रवासिचरस्थिरप्रश्नः

ध्वजे गजे स्थिरश्चैव शुनि सिंहे च चञ्चलम् ।
वृषे धूम्रे प्रयाणस्थं खरे ध्वाङ्क्षे च काष्ठगम् ॥ १० ॥

### अथ गमनप्रश्नः

ध्वजे धूम्रे समीपस्थं दूरस्थं गजसिंहयोः ।
वृषे खरे च मार्गस्थं ध्वाङ्क्षे शुनि पुनर्गमः ॥ ११ ॥

## अथ कालप्रश्नः

ध्वजे पक्षमिदं प्रोक्तं धूम्रे सप्तदिनं तथा ।
एकविंशतिः सिंहे च शुनि मासं तथैव च ॥
वृषे च सार्द्धमासं स्यात् खरे मासद्वयं तथा ।
गजे मासत्रयं प्रोक्तं ध्वाङ्क्षे च अयनं स्मृतम् ॥ १२ ॥

## अथ मुष्टिवस्तुज्ञानप्रश्नः

कुसुमश्च ध्वजे ज्ञेयं धूम्रे श्वेतं तथैव च ।
लोहितं गजसिंहे च शुनि च पाण्डुनीलकम् ॥
पीतवर्णं वृषे ज्ञेयं खरे च धूम्रवर्णकम् ।
गजे च श्यामवर्णश्च ध्वाङ्क्षे च मिश्रवर्णकम् ॥ १३ ॥

## अथ मुष्टिवस्तुज्ञानप्रश्नः

ध्वजे पत्रश्च विज्ञेयं धूम्रे पुष्पं विशेषतः ।
सिंहे फलश्च विज्ञेयं शुनि काष्ठादिसम्भवम् ॥
वृषे धान्यं तथा प्रोक्तं खरे तृणं निगद्यते ॥
गजे जीवनं विज्ञेयं ध्वाङ्क्षे तृणं तथा स्मृतम् ॥ १४ ॥

## अथ धातुज्ञानम्

ध्वजे सुवर्णकं ज्ञेयं धूम्रे रौप्यं तथैव च ।
सिंहे ताम्रश्च विज्ञेयं शुनि लौहं विदुर्बुधाः ॥

वृषे कांस्यं खरे नागं कपिलश्च गजे भवेत् ।
ध्वाङ्क्षे च पित्तलं ज्ञेयं कथितं पूर्वपण्डितैः ॥ १५ ॥

## अथ भूषणादिज्ञानम्

ध्वजे च भूषणं मूर्ध्नि धूम्रके मुखभूषणम् ।
कण्ठभूषणं सिंहे च शुनि च हृदयं तथा ॥
वृषे हस्तादिविज्ञेयं अङ्गुलीभूषणं खरे ।
गजे च कटिसूत्रश्च ध्वाङ्क्षे पादादिकं तथा ॥ १६ ॥

## अथ पुत्रकन्यादिज्ञानप्रश्नः

ध्वजे गजे वृषे सिंहे गुर्विणी पुत्रमादिशेत् ।
धूम्रे श्वाने खरे ध्वांक्षे कन्याजन्मविनिर्दिशेत् ॥ १७ ॥

## अथ आयुर्बलप्रश्नः

ध्वजे सिंहे षडप्रोक्तं गजे सोमसुतस्तथा ।
वृषे च षष्टिवर्षाणि खरे व्योमाब्धिसंज्ञकम् ॥
शुनि च विंशतिः प्रोक्ता ध्वाङ्क्षे षोडशभिस्तथा ।
धूम्रे वर्षमितं प्रोक्तमायुःप्रश्नं विनिर्दिशेत् ॥ १८ ॥

## अथ धातुमूलजीवप्रश्नः

ध्वजे धूम्रे च धातूनां गजे सिंहे च मूलकम् ।
खरे शुनि वृषे ध्वाङ्क्षे जीवचिन्ता भवेद् ध्रुवम् ॥ १९ ॥

## अथ सन्धिप्रश्नः

विपरीतौ च सन्धिः स्यादथ प्रोक्तं मनीषिभिः ।
गदं कोटं तथा दुर्गं गृहादि च विचिन्तयेत् ॥ २० ॥

## अथ गमनागमनप्रश्नः

गजे वृषे ध्वजे सिंहे शत्रूणां शीघ्रमागमः ।
खरे शुनि तथा धूम्रे ध्वाङ्क्षे च नास्ति चादिशेत् ॥ २१ ॥

## अथ सत्यमिथ्याप्रश्नः

ध्वजे सिंहे वृषे गजे सत्यवाक्यं विनिर्दिशेत् ।
धूम्रे शुनि खरे ध्वाङ्क्षे मिथ्या वदति निश्चितम् ॥ २२ ॥

## अथ वृष्टिप्रश्नः

वृषे शुनि गजे धूम्रे वृष्टिर्भवति सत्वरम् ।
सिंहे ध्वजे खरे ध्वाङ्क्षे नास्ति वृष्टिर्विनिर्दिशेत् ॥ २३ ॥

## अथ दिनावधिप्रश्नः

धूम्रे सप्तदिनं प्रोक्तं वृषे दिनं तथैव च ।
शुनि विंशतिर्ध्वाङ्क्षे स्याद् ध्वजे च सप्तविंशतिः ॥
सिंहे वृषे च व्योमाब्धिः खरे ध्वांक्षे ऋतुं वदेत् ।
एवं प्रश्नं विनिर्ज्ञेयं कथितं गणकोत्तमैः ॥ २४ ॥

### अथ व्यवहारप्रश्नः

ध्वजे गजे वृषे सिंहे व्यवहारं शुभप्रदम्।
ध्वांक्षे शुनि खरे धूम्रे कलहमशुभप्रदम्॥ २५॥

### अथ नौकाप्रश्नः

ध्वजे गजे च सिंहे च वृषे च कुशलप्रदम्।
ध्वांक्षे शुनि खरे धूम्रे नौकायात्रा न सिद्ध्यति॥ २६॥

### अथ वाणिज्यप्राप्तिप्रश्नः

ध्वजे गजे ऋणप्राप्तिर्वृषे सिंहे च सिद्धता।
खरे शुनि तथा प्राप्तिः शत्रुं गृह्णाति सत्वरम्॥
ध्वाङ्क्षे धूम्रे च नास्ति च कलहं भ्रातृभिः सह॥ २७॥

### अथाधिकारप्राप्तिप्रश्नः

ध्वजे गजे स्थिरप्राप्तिः वृषे सिंहे च शीघ्रता।
कलहन्तु खरे श्वाने नास्तीति ध्वाङ्क्षधूम्रके॥ २८॥

### अथ ग्रामप्राप्तिप्रश्नः

ध्वजे गजे वृषे चैव धूम्रे नास्तीति निश्चितम्।
शुनि सिंहे खरे ध्वाङ्क्षे ग्रामप्राप्तिं विनिर्दिशेत्॥ २९॥

### अथ कार्यसिद्धिप्रश्नः

ध्वजे गजे स्थिरं कार्यं त्वरितं वृषसिंहयोः।

दीर्घकालं श्वखरयोः ध्वाङ्क्षे धूम्रे न सिद्ध्यति ॥ ३० ॥

## अथ बन्दिमोचनप्रश्नः

शुनि धूम्रे खरे ध्वाङ्क्षे बन्दी शीघ्रं प्रमुच्यते ।
वृषे गजे ध्वजे सिंहे बन्दिनः कष्टमादिशेत् ॥ ३१ ॥

## अथ कालनिर्णयः

ध्वजे सप्तदिनं प्रोक्तं सिंहे पक्षं तथैव च ।
वृषे मासश्च विज्ञेयं गजे मासत्रयं तथा ॥
शुनि खरे सप्तमासं धूम्रे ध्वाङ्क्षे च वर्षकम् ॥ ३२ ॥

इति ध्वजादिप्रश्नगणना समाप्ता ।



समाप्तश्चायं ग्रन्थः ।



मुद्रकः—विद्याविलास प्रेस, वाराणसी, सं० २०१६